रामे स्वपदमारूढे ते जनाः सरयूजले ।
त्यक्तमोहाः प्रभालोलैर्विमानैस्त्रिदिवं ययुः ॥ १२५९ ॥
सुग्रीवप्रमुखाः सर्वे त्रिदशांशाः प्लवङ्गमाः ।
तां तां मूर्तिं समाश्रित्य स्वं स्वं धाम प्रपेदिरे ॥ १२६० ॥
शून्या वर्षशतान्यासीदयोध्या रामवर्जिता ।
न यावदृषभो नाम बभूव भुवि भूपतिः ॥ १२६१ ॥
कर्णे कृताश्च हृदये निहिताश्च सद्भि-
मूर्ध्ना धृताश्च मणयो रुचिरा इवैते ।
रामस्य चारुचरितामृतदुग्धसिन्धो-
रानन्दचन्द्रजनकस्य गुणा जयन्ति ॥ १२६२ ॥
इति दुरितविरामः कीर्तिकान्ताभिरामः
सुजनहृदयरामः कोऽप्यभूद्यः स रामः ।
प्रकृतमनुसरामः पापपाशं तरामः
सुकृतभुवि चरामस्तस्य नाम स्मरामः ॥ १२६३ ॥

इति स्वर्गारोहणम् ॥ ५२ ॥

इति क्षेमेन्द्रविरचिते रामायणकथासारे उत्तरकाण्डः समाप्तः ।

---

भोगार्हे नवयौवनेऽपि विपिने चीराम्बरो राघव-
स्तत्राप्यस्य परेण दारहरणं क्लेशस्तदन्वेषणे ।
संप्राप्तापि जनापवादरजसा त्यक्ता पुनर्जानकी
सर्वं दुःखमयं तदस्तु भवतां श्लाघ्यो विवेकोदयः ॥ १ ॥
स वः पुनातु वाल्मीकेः सूक्तामृतमहोदधिः ।
ओंकार इव वर्णानां कवीनां प्रथमो मुनिः ॥ २ ॥
कश्मीरेष्वभवत्सिन्धुजन्मा चन्द्र इवापरः ।
प्रकाशेन्द्रः स्थिरा यस्य पृथ्व्यस्य कीर्तिकौमुदी ॥ ३ ॥
सदा दानार्द्रहस्तेन महता भद्रमूर्तिना ।
साधु कुञ्जरिता येन प्राप्ता कीर्तिपताकिना ॥ ४ ॥

विद्वज्जनसपर्याप्तपर्याप्तस्वजनोत्सवः।
कथासारसुधासारं क्षेमेन्द्रस्तत्सुतो व्यधात् ॥ ५ ॥
मुक्तात्मना रणत्तारहारनूपुरमेखला।
विलासलासिका यस्य वदनं भाति भारती ॥ ६ ॥
लोभाभिमानमलिनानि धनानि नित्यं
कान्ताकटाक्षचटुलानि च जीवितानि।
ज्ञात्वेति चन्द्रधवलानि यशांसि येन
काव्यैः स्थिराणि भुवनेषु निवेशितानि ॥ ७ ॥
आमोदयन्ति सरसान्यतिकोमलानि
विप्रेण रामयशसा प्रणयार्थितानि।
येनानिशं प्रणयभूषणतां जनस्य
नीतानि काव्यकुसुमान्यसितानि तानि ॥ ८ ॥
गुणागुणतया भान्ति येषु वस्तेषु[1] विस्मयः।
निर्गुणेषु गुणानेव ये वदन्ति जयन्ति ते ॥ ९ ॥

इति क्षेमेन्द्रविरचिता रामायणमञ्जरी समाप्ता।

---



१. 'कस्तेषु' स्यात्.

## —कतिपयोपयोगिग्रन्थाः—

| | कि. रु.आ. | ट. रु.आ. |
|---|---|---|
| **रघुवंशम्**—महाकविकालिदासप्रणीतम्, मल्लिनाथविरचितया संजीविन्या, वल्लभदेवविरचित-रघुवंशपञ्जिकायाः, भट्टहेमाद्रिकृतस्य रघुवंशदर्पणस्य, दिनकरमिश्रप्रणीतायाः सुबोधिन्याः, चारित्रवर्धनविरचितायाः शिशुहितैषिण्याः, सुमतिविजयकृत-सुगमान्वयाख्यायाश्चेति व्याख्यापञ्चकस्य विशिष्टांशैः, रघुवंशसार-पाठान्तर-श्लोकानुक्रमणी-विविधाभिनवोपयुक्तपरिशिष्टैः, प्रो. एच्. डी. वेलणकरमहाशयानां प्रास्ताविकेन, संपादकीयटिप्पण्यादिभिश्च सनाथीकृतं ५०० पृष्ठात्मकमभिनवं संस्करणम्. | ४॥ | ०॥० |
| **अभिज्ञानशाकुंतलम्**—(सटीकम्.) प्राचीनतमपाठपरिशिष्टादिभिरुपबृंहितम्. ... ... ... ... | ३॥ | ०॥० |
| **अद्भुतदर्पणनाटकम्**—श्रीमहादेवकविविरचितम्. ... | १ | ०=) |
| **अमृतोदयनाटकम्**—श्रीमद्गोकुलनाथकृतम्. ... ... | ०|||० | ०=) |
| **उन्मत्तराघवप्रेक्षणकम्**—भास्करकविविरचितम्. ... | ०॥० | ०=) |
| **जीवानन्दम्**—आनन्दरायमखिप्रणीतम्. ... ... | १। | ०=) |
| **दूताङ्गदं नाटकम्**—श्रीसुभटकविविरचितम्. ... ... | ०।= | ०=) |
| **धनंजयविजयः**—श्रीकांचनाचार्यविरचितः. ... ... | ०।= | ०=) |
| **प्रसन्नराघवनाटकम्**—श्रीजयदेवकविविरचितम्. ... ... | १। | ०=) |
| **महावीरचरितम्**—भवभूतिकृतम्, वीरराघवकृतटीकासहितम्. | २॥ | ०।=) |
| **भर्तृहरिनिर्वेदम्**—हरिहरोपाध्यायकृतम्. ... ... | ०।- | ०-) |
| **मृच्छकटिकं नाटकम्**—पृथ्वीधरकृतव्याख्यया सहितम्. | १॥ | ०।० |
| **लटकमेलकप्रहसनम्**—शङ्खधरविरचितम्. ... ... | ०॥० | ०=) |
| **विद्यापरिणयः**—आनन्दरायमखिविरचितः. ... ... | | |
| **वृषभानुजा नाटिका**—श्रीमथुरादासविरचिता... ... | | |
| **सुभद्राहरणम्**—[illegible] ... ... | | |

मॅनेजर—निर्णयसागर मुद्रणालयम्, मुं[illegible]